यान्तेभ्यः स्त्रियामकारप्रत्ययः । चिकीर्षा । पुत्रकाम्या ॥ **गुरोश्च हलः** ।३।३।१०३। गुरुमतो हलन्तात्स्त्रियामप्रत्ययः । ईहा । ऊहा ॥ **षिद्भिदादिभ्योऽङ्** ।३।३।१०४। जृष् 'ऋदृशोऽङि गुणः' । जरा । त्रपूष् त्रपा । भिदा । विदारण एवायम् । भित्तिरन्या । छिदा । मृजा । ( **कृपेः संप्रसारणं च** ) । कृपा ॥ **आतश्चोपसर्गे** ।३।३।१०६। अङ् स्यात् । उपदा । अन्तर्द्धा ॥ **ण्यासश्रन्थो युच्** ।३।३।१०७। टापवादः । कारणा ॥ **रोगाख्यायां ण्वुल् बहुलम्** ।३।३।१०८। प्रच्छर्दिका । प्रवाहिका । विचर्चिका । क्वचिन्न । शिरोर्तिः । ( **धात्वर्थनिर्देशे ण्वुल्वक्तव्यः** ) आसिका । ( **इक्श्तिपौ धातुनिर्देशे** ) । पचिः । पचतिः । ( **वर्णात्कारः** ) निर्देश इत्येव । अकारः । ककारः । ( **रादिफः** ) । रेफः ॥ **नपुंसके भावे क्तः** ।३।३।११४। **ल्युट् च** ।३।३।११५। हसितम् । हसनम् ॥ **करणाधिकरणयोश्च** ।३।३।११७। ल्युट् । अनुमानः । अनुमानी ॥ **पुंसि संज्ञायां घः प्रायेण** ।३।३।११८। **छादेर्घेऽद्व्युपसर्गस्य** ।३।४।९६। द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वो घे । दन्तच्छन्दः । आकुर्वन्त्यस्मिन्नित्याकरः । **अवेतॄस्त्रोर्घञ्** ।३।३।१२०। अवतारः । अवस्तारो जवनिका ॥ **हलश्च** ।३।३।१२१। हलन्ताद्घञ् । घापवादः । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिकमित्यपामार्गः ॥ **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** ।३।३।१२६। एषु दुःखसुखार्थेषूपपदेषु खल् तयोरेवेति भावे कर्मणि च । कृच्छ्रे दुष्करः कटो भवता । अकृच्छ्रे ईषत्करः । सुकरः ॥ **आतो युच्** ।३।३।१२८। खलोऽपवादः । ईषत्पानः सोमो भवता । दुष्पानः । सुपानः ॥ **आवश्यकाधमर्ण्ययोर्णिनिः** ।३।३।१७०। अवश्यंकारी । शतंदायी ॥ **कृत्याश्च** ।३।३।१७१। तथा धातोः । अवश्यं सेव्यो हरिः । शतं देयम् ॥ **क्तिच् क्तौ च संज्ञायाम्** ।३।३।१७४। आशिषि । वातिर्वायुः । शिवो देयादेनं शिवदत्तः ॥ **अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा** ।३।४।१८।

१ कथं तर्हि 'मुखाब्जगन्धलब्धेः' इति माघः 'भिक्षोपलब्धिः' इत्यमरश्च । भित्वादिषु लभेस्त्वेव कुचितम् । सत्यम् । अनर्थकास्तु प्रतिवर्णमनुपलब्धेरिति भाष्यप्रयोगाज्ञापकाद्वा सिद्धिरपि बोध्यः । २ 'न लोका' इति षष्ठीनिषेधात् कर्तरि तृतीया ।